सम्पादयन्ति, तदैव सुष्ठु स्यात्। अथ व्ययमेवार्थदाही मनोरथविषयः कौतुककरश्च तदा भूयसा द्रव्येण विपणिगतान् विविधवर्णान् वसनभारान् संगृह्य तैरतिरम्यवसनमयतरणीप्रभृतिकं निर्म्माय वह्निसंयोगेन दाह्यमानं स्रोतोऽभिमुखं परिचालयन्तु, तेनैवाभिप्रेतवस्तुचयो विधिवोधितालोकदानं कौतुकञ्चेत्येतानि सर्व्वाण्येव सम्भवेयुः।

**मस्कोनगरे विश्वविद्यालयः।**—भारतीयप्राचीननालान्दाविश्वविद्यालयः सुविदित एव साम्प्रतन्तनानां विदुषां, तत्र यथा शिष्याणामाहारं वासस्थानञ्च वितीर्य्य विद्याग्रहणप्रथा समवर्त्तत, तथैव रुषियावासिनो वलशेभिकजातीयाः सुप्रसिद्धमस्कोनगर्य्यां शिष्याणां आहारस्य वासस्थानस्य च प्रदानेन शिक्षणार्थं कञ्चन विश्वविद्यालयं स्थापितवन्तः। अस्य विश्वविद्यालयस्य तावदभिधानं "पश्चिमविश्वविद्यालय" इति। अत्र सम्प्रति वलशेभिकानां षट्शतो शिक्षां लभते। शिक्षार्थिनः तत्र आहारं वासस्थानं स्वीयव्ययान्तरनिर्व्वाहाय द्रव्याणि च समुपलभन्ते। (सम्मिलनीतः)

मन्तव्यम्:—शिक्षार्थिनामाहारवासस्थानादिप्रदानेन शिक्षादानं भारतेषु सुतरां पुरातनमपि पाश्चात्त्यानामतिनूतनमित्यत्र नास्ति सन्देहलेशोऽपि। यदि अद्यापि समन्विष्यते भारतवर्षे, तदा किमु संस्कृतशास्त्राध्ययनविद्यालयेषु नोपलभ्येरन् दीयमानाहारवासस्थानाः परःसहस्राः शिक्षार्थिनः समक्षं, तदिदं भारतवर्षे पुरातनमिति नास्माकं दृष्टिमाकर्षति, अत एव दुर्लभेषु वैदेशिकप्रयत्नेषु दृष्टिरारोप्यते।

**समीरणे स्वर्णान्वेषणम्।**—"निउइयर्क" नामकस्थानस्य रूप्यकशालाध्यक्षाणां लिपिविदिनां विदितं यत् तदीयरूप्यकशालायां समीरणात् सुवर्णसंग्रहप्रचेष्टा प्रचलति कृतार्थता च जाता भूयमानां प्रचेष्टानाम्। मुद्रानिर्म्मापणाय विद्रावितानां स्वर्णानां ये

वाष्पभारा वातमभि समुत्सर्पन्ति, तत एव यन्त्रसाहायकेन सुवर्णानि संगृह्यन्ते। अनेनोपायेन सम्राट्कोषस्य प्रचुरसुवर्णापचयनिराकरणं भवेदित्यत्र नास्ति सन्देहः। (सङ्कलनीतः)

मन्तव्यम्।—नेदमस्माकमत्यानन्दकरमिव प्रतिभाति, यदेतावतः परिवत्सरान् सत्स्वपि प्रवीणप्रवीणेषु वैज्ञानिकलीलाचतुरेषु न तादृशः कश्चनोपायः समुद्भावितो नापि तथा कृतमन्वेषणं वायौ स्वर्णसम्पर्कस्य। क्षुद्रमतिष्वपि अस्मद्देशीयस्वर्णकारेषु द्रावितसुवर्णकणसंग्रहाय दृश्यते स्वर्णदाहहेतुभूतानाम् अङ्गाराणां क्रयादिकमपि। घ्राणिनार्द्रभाजनमिति नियमस्यापि वायादिमार्गेण तत्तद्वस्तुपरमाण्वादिसम्पर्क एव निदानमिति सूक्ष्ममीक्षणीयम्।

———

## समालोचना।

सामवेदसंहिता। (आग्नेयपर्व्वमात्रम्) श्रीसत्यव्रतदेवशर्म्मकृतव्याख्यादिभिरलङ्कृता। अद्वैतचरणमल्लिकवर्म्मनः। श्रीव्रजेश्वररायमहाशयेन प्रकाशिता।

अधिगतमस्माभिरेतत् पुस्तकम्। वैदेशिकानां तथा वैदेशिकभावविमुग्धमानवानां स्वदेशीयानामपव्याख्याविषमूर्च्छिते समग्रे वेदशास्त्रे सर्व्वे एव वेदसद्व्याख्याप्रकाशनप्रयत्ना नितरामेव समादरमर्हन्तीति एतादृशानि पुस्तकानि सर्व्वथैव समालोचनीयानि सुधीजनानामिति मन्यामहे।

सामवेदसंहिता। (आग्नेयपर्व्व) श्रीसत्यचरणदेवशर्म्मकृतवङ्गानुवादगुम्फिता। अद्वैतचरणमल्लिकवर्म्मनः श्रीव्रजेश्वररायमहाशयेन प्रकाशं नीता।

पूर्व्वालोचितस्य पुस्तकस्य वङ्गानुवादरूपेयं अनधिगतसंस्कृतानां सुमहते उपकाराय कल्पिष्यते इत्याशास्महे वयम्।

———

---

